मधुकाण्डे याज्ञवल्क्यकाण्डे विज्ञानमीरितम् ।
तत्सर्वमुपसंहर्तुं मैत्रेयीब्राह्मणं भवेत् ॥ १ ॥
वक्तव्यश्च विशेषोऽत्र पूर्वोक्तादधिको नहि ।
इति सूचयितुं शेषस्तत्पाठः पुनरुच्यते ॥ २ ॥

---

पञ्चम ब्राह्मण

'मधुकाण्डे' इत्यादि । मधुकाण्डमें तथा याज्ञवल्क्यकाण्डमें जो विज्ञान कहा गया था, उस सबका उपसंहार करनेके लिए मैत्रेयी ब्राह्मण है । भाव यह है कि पूर्व ब्राह्मणमें मन्त्र और ब्राह्मणोंसे अर्थानर्थ और उनके हेतु, पुरुषार्थ और उसके हेतु—इन चारोंका उपदेश देकर मन्त्र ही से पुरुषार्थमार्गमें संपूर्ण वेदका विनियोग कह कर, सोपाधिक और निरुपाधिक भेदसे द्विविध ब्रह्म, उसका ज्ञान और ज्ञानका फल भी कहा गया । अब कुछ वक्तव्य अवशिष्ट नहीं है, अतः उत्तर ब्राह्मण अनावश्यक है, इस शङ्कासे पूर्ववृत्तका कीर्तन करते हैं । आगमाङ्ग युक्तियोंका आगमोत्तर कथन युक्त है, क्योंकि प्रधान आगमके निर्देशके अनन्तर गुणभूत तदङ्गका निर्देश समुचित होता है । जल्पन्यायसे पञ्चम अध्यायमें निरूपण और वादन्यायसे षष्ठ अध्यायमें निरूपण है—ससंन्यास आत्मविद्या जो मधुकाण्डागमसे कही गई है, वही संन्याससहित आत्मविद्या न्यायप्रधान मुनिकाण्डसे भी कही गई है, मोक्षके लिए ससंन्यास आगमसे कही गई है, श्रुति और युक्तिसे सिद्ध अर्थके उपसंहारके लिए यह ब्राह्मण है ॥ १ ॥

'वक्तव्यश्च' इत्यादि । पूर्वोक्तसे अधिक इस अध्यायमें कुछ भी वक्तव्य नहीं है, इसके सूचनके लिए उसी पाठको यहां फिर कहते हैं, यह सारा संसार परमात्मासे ही आविर्भूत हुआ है, अतः कार्य और कारणका अभेद होनेसे सब परमात्मस्वरूप है, सब कार्यका तत्त्व परमात्मा ही है । भीतर और बाहर सैन्धवके टुकड़ेके समान सैन्धवके समान विज्ञानघन विज्ञानात्मा है । स्वविकाराविद्योपश्लेषसे तद्विकारबुद्ध्यादिसे विज्ञानात्मत्वको प्राप्त कर विद्यासे अविद्याका नाश होनेपर पुनः स्वप्रकृतिस्थ हो जाता है अविनाशी शब्दसे परिणामरूप नाशका प्रतिषेध है और अनुच्छित्तिशब्दसे निरन्वय नाशका प्रतिषेध इष्ट है । चारों अध्यायोंमें एक ब्रह्म ही आत्मा है । ब्रह्मप्राप्तिके उपायोंके भेदसे उपेयभेदकी शङ्का अयुक्त है । उपेय सर्वत्र एक ही है ॥ २ ॥

यद्यप्यतीतकाण्डेऽस्ति मधुब्राह्मणमुत्तमम् ।
तथापि याज्ञवल्क्येन सम्बन्धायेदमुच्यते ॥ ३ ॥

इति वार्तिकसारे चतुर्थाध्यायस्य पञ्चमं ब्राह्मणं समाप्तम् ।

## षष्ठं ब्राह्मणम्

अथ वꣳशः पौतिमाष्यात् पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥

आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायणः उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यंदिनायनान्माध्यंदिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥

घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजंघनेरौपजंघनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमो गौतमाद्गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरा-

---

'यद्यप्य०' इत्यादि ।

शङ्का—दो काण्डोंसे प्रतिपादित विज्ञानके उपसंहारके लिए यह ब्राह्मण है, यह जो आप कहते हैं, वह ठीक नहीं है, क्योंकि मधुकाण्डका उपसंहार तो मधुकाण्डब्राह्मणसे ही हो चुका है ।

समाधान—मधुब्राह्मणका अनेकार्थत्व कहा गया है, उसमें हेत्वसिद्धिके निराकरणके लिए यह ब्राह्मण है, अतः काण्डद्वयोपसंहारपरक है । यदि उसको मधुकाडार्थनिगमनपरक मानें, तो इसे केवल मुनिकाण्डार्थमात्रनिगमनपरक समझना चाहिए ॥ ३ ॥

पञ्चम ब्राह्मण समाप्त

त्पन्थाः सौभरेः सौभरिरयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूति-स्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्व-णाद्दध्यङ्ङाथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभुब्रह्मणे नमः ॥ ३ ॥

इत्युपनिषदि षष्ठाध्याये षष्ठब्राह्मणं समाप्तम् ।

उपसंहृत्य तां विद्या काण्डवंशोऽथ वर्ण्यते ।
स व्याख्यातः पूर्वमेव ब्रह्माप्त्यै जप्यतामिति ॥ १ ॥
नवत्यधिकसंख्याताः श्लोका नवशतानि च ।
सन्ति वार्तिकसारेऽस्मिन् षष्ठाध्यायस्य सङ्ग्रहे ॥ २ ॥

इति वार्तिकसारे चतुर्थाध्यायस्य षष्ठब्राह्मणं समाप्तम् ।

* 

---

छठा ब्राह्मण

'उपसंहृत्य' इत्यादि । आत्मविद्याका उपसंहार कर काण्डवंशका वर्णन करते हैं ।

शङ्का—पुनः वंशवर्णनकी क्या आवश्यकता है ?

समाधान—चतुर्थाध्यायमें इसका उत्तर कर चुके हैं, अतः उसीका यहाँ स्मरण करो । ब्रह्मप्राप्तिके लिए इसका जप करना चाहिए, यही प्रयोजन है ॥ १ ॥

'नवत्य०' इत्यादि । ९९० नव सौ नब्बे श्लोक षष्ठाध्यायके सङ्ग्रहके लिए इस वार्तिकसारमें हैं ॥ २ ॥

वैक्रमे नागनन्दाङ्कशशाङ्कमितवत्सरे
वैशाखकृष्णैकादश्यां भौमे मध्याह्नगे रवौ ।
वाराणस्यां नीलकण्ठे राधाकृष्णस्य मन्दिरे
वसन् वार्तिकसारस्य भाषाटीकामपूपुरम् ॥

म० म० पण्डितप्रवरश्रीहरिहरकृपालुविरचितवार्तिकसारभाषानुवादमें छठा ब्राह्मण समाप्त ।

*

श्रीः



—❀—

क्रोशैरन्तरितं चतुर्भिरनघश्रेणीत्रिवेणीतटात्
विद्योपार्जितभूषु पण्डितपुरं यद्भात्यवाच्यां स्थितम् ।
अस्मत्तातपितामहेन सुधिया धाराधरेण स्वयं
सारामं नववासितं द्विजमयं तत्राऽस्मदीयं जनुः ॥ १ ॥

पूज्यश्रीलपितामहाद् मम विदो विश्वम्भरादक्षरा-
रम्भोऽभूत् सुदिने वराँवनृपतेर्द्वारि प्रधानात् पितुः ।
प्राज्ञाच्छ्रीबलभद्रदत्तकृतिनः प्रारभ्य शब्दागमं
स्वाध्यायव्युपरोधि कर्मबहुलं पश्यन्नयोध्यामगाम् ॥ २ ॥

रामाज्ञापदपङ्कजादधिगतिस्तत्राऽभवद् व्याकृतेः
श्रीलोमापतिपादपद्मरजसस्सप्राच्यतर्काम्बुधेः ।
वेदान्तादिकदर्शनस्य वसतः काश्यामगस्त्याश्रमे
निःशेषागममन्थमन्दरमतेः श्रीराममिश्राङ्घ्रितः ॥ ३ ॥

श्रीमद्रामनिरञ्जनस्य महतो व्यापारपुष्यद्धियः
श्रद्धाभक्तिदयादरादिगुणिनो विद्यालये पाटने ।
छात्रौघं सपरिश्रमम्बहुतिथं शास्त्राण्यलम्पाठयन्
तस्य स्वान्तमतूतुषं गुरुदयं सन्तोषवृत्त्या चिरम् ॥ ४ ॥

सत्यप्रेमशुभाश्रयाश्रितकृपादानोपकारक्षमा
तेजःसूक्तिविशुद्धिसंयमगुणग्रामाभिरामाकृतिः ।
वाग्मी धर्मधुरन्धरः परहितोन्मेषप्रदव्याहृतिः
ज्ञानानन्दमयेश्वराङ्घ्रिमधुपः श्रेष्ठी ममाऽऽसीच्चिरम् ॥ ५ ॥

काश्यां [illegible] निवसति द्रव्यं ददानोऽर्थिने
तस्मिन् योगनिरामयार्थिनि परमानन्दस्वभावं गते ।
संसारेषु तदादिमं त्वपरतो [illegible]-
[illegible] त्ववसरं [illegible] प्रार्तथे ॥ ६ ॥

हीरालालोऽस्य भ्राता [illegible] नोच्चः
ज्यायान्कालान्तरेऽसौ पुनरपि कथितो [illegible]मन्त्रयित्वा ।
श्रेयोर्थिभ्योपरोधः क्षतिरपि महतो माऽस्तु विद्यालयस्ये-
त्याह प्रेम्णा प्रबन्धं निवसतु विदधद् यत्र वोऽभीष्टसिद्धिः ॥ ७ ॥

पञ्चाशत्प्रतिमासमत्र भवते मुद्राः प्रदास्यामहे
सङ्कल्पं लघुमेनमेतमुचितं पुष्णातु नः प्रीतये ।
स्वीकृत्य प्रचुराशिषा सह मतः संयोज्य सन्तोष्य तान्
अष्टौ [illegible] [illegible]पुरं संसारसेतुं श्रये ॥ ८ ॥

संस्थाप्य स्थिरशास्त्रमार्मिकमतिं श्रीब्रह्मदत्तं सुतं
तत्रैतत्कृतिकौशलं बहुगुणं स्वामिप्रमोदप्रदम् ।
छात्रौघाभ्युदयादिसाधनमितः श्रुत्वा श्रुतेरीप्सितं
मन्ये रामसदाशिवस्य कृपया सर्वं फलं सूयते ॥ ९ ॥

आसीद्वैश्यान्वयोत्पलकुलमिहिरः श्रीसदानन्दरामः
व्यापारोत्कर्षशीलः प्रथितगुणगणः धर्मकर्मप्रवीणः ।
सन्मार्गाव्यग्रचित्तः सकलहितपरः प्रेमपूर्णोपदेशः
शुद्धोदारस्वभावप्रमितहितकथः सान्वितार्थाभिधानः ॥ १० ॥

राधाकृष्णोऽस्य पुत्रो जनकसमगुणः पूर्वजाध्वानुवर्ती
सर्वव्यापारदक्षः स्वगणपरिवृढः सर्वसामान्यवृत्त्या ।
दीनान्तःक्लेशशान्तिप्रणयननिपुणः सर्वदोदारवृत्तिः
न्याय्योद्योगप्रयोगप्रगुणितविभवो भूरिविख्यातिमापत् ॥ ११ ॥

तत्पुत्राः पञ्च तेषु प्रथमजननभृत् सर्वसुप्रीतिपात्रम्
जोखीरामोऽविरामोन्नतिपरहृदयो धर्मकर्मैकनिष्ठः ।
सर्वत्रोदारदृष्टिः प्रणतभयहरः सत्स्वभावानुवर्ती
व्यापारिव्यूहसेव्यव्यवहृतिवचनोऽभून्न कस्य प्रियः सः ॥ १२ ॥

तत्सूनु [illegible] ऽमलकुलालङ्कारहीरोपमः
[illegible] ह्यानवद्योदयः ।
वैधे कर्मणि कर्मठः परहितोत्पादप्रयासोत्सवः
धर्मोद्धारधुरन्धरोऽजनि जनः कोऽन्यस्तदीयोपमः ॥ १३ ॥

गौरीशङ्करनामकोऽस्य तनयः पुण्यापरोक्षाकृतिः
ब्रह्मानन्दपरानुभूतिसुहितो वीतस्पृहः संसृतौ ।
गौरीशङ्करपादपङ्कजरसैराप्यायितान्तस्थलः
प्रारब्धं क्षपयन्निहाऽस्ति जननीशुश्रूषया सान्वयः ॥ १४ ॥

निर्मानासङ्गमोहप्रमदमुखजनुर्दोषरोषादिरिक्तः
शुश्रूषाध्यानयोगप्रशमदमगुणैः प्रोतसंपूतचेताः ।
धर्म्यानुष्ठाननिष्ठापरिहृतहृदयानन्तसन्तानदोषः
लक्ष्मीसोद्दामलीलावलयितशरणो राजते शुद्धसत्त्वः ॥ १५ ॥

आबाल्यं विश्वकर्तुश्चरणकमलयोर्यस्य गाढोऽनुरागः
भक्त्या सानन्दमस्याऽच्युतचरितकथावाचनेऽयुङ्क्त चित्तम् ।
मातापित्रोः सदाज्ञानुसरणनियता सर्वकर्मप्रवृत्तिः
सोऽयं धर्माभिगुप्त्यै सुदृढपरिकरः पाति सद्धर्ममूलम् ॥ १६ ॥

सन्त्यन्येऽपि सहस्रमत्र धनिनो लक्ष्मीकृपाभूमयः
तस्योद्धारसमीहया च ददति द्रव्यं सहर्षं भृशम् ।
किन्त्वेते न विविञ्चते धिषणया मूलस्य रक्षाविधेः
शाखापुष्पफलादिरक्षणमपि स्यादेव कामं ततः ॥ १७ ॥

श्रीमच्छाङ्करभाष्यसिन्धुमथनज्ञातात्मतत्त्वामृतः
श्रीमद्भागवतार्थबोधवशतः प्रोद्भूतभक्त्यङ्कुरः ।
वेदान्तेषु परात्मबोधनिपुणैः संशोधिताभ्यन्तरः
युक्तः श्रेष्ठिमहोदयोऽपि कुरुते कर्माऽखिलं निर्ममः ॥ १८ ॥

अस्मिन् श्रीश्च सरस्वती च वसति प्रेम्णाऽऽश्रयोत्कर्षतः
त्यक्त्वा शाश्वतिकं विरोधमभितः स्वाचारधर्मैः समम् ।
दानौदार्यदयादरैकशरणव्यापारपारीणधीः
सोऽयं केन कथं गुणैकजलधिः कैरक्षरैः स्तूयताम् ॥ १९ ॥

[illegible]

[illegible]परम्परानुराग[illegible]शुद्धाशयः ।

अन्येषां भगिनामिवाऽस्य हृदयं [illegible]

संस्कारस्य न शिक्षयाऽपि नवया जातस्य चित्रीयते ॥ २० ॥

भूतिर्यस्य जगद्धितैकजननी धर्मानुबन्धी व्ययः

सन्न्यायप्रवणाऽनुभूतिरमला शुद्धचरित्रोदयः ।

सन्मार्गावननिष्ठितं च हृदयं सर्वोत्तमनीनं व्रतम्

आस्ते शान्तिकरं प्रियं सुवचनं तस्याऽस्य धन्यं जनुः ॥ २१ ॥

भूत्वा वैश्यकुलामलातुलमणिर्विज्ञानवद्याशयः

स्वामी सन्नपि कोमलैः श्रुतिसुखैः शिक्षाश्रयैर्भाषितैः ।

सागस्कस्य निजाश्रवस्य हृदयं सम्प्रीणयन् गुरुवरं

सर्वं गृष्यति या कृपाः पुरोरात अब्याहरंत्रप कः ॥ २२ ॥

आचारोपचितात्मबोधमहितप्रज्ञापरीताकृतिं

नित्यानन्दमयाद्वयात्मनियतप्रेमप्रबुद्धान्तरम् ।

दृष्ट्वा भक्तिरसप्रसक्तिहृदयः सोत्कण्ठमासं गृहं

प्रेष्ये सत्यपि सादरं स्वयमसौ शुश्रूषतेऽभ्यागतम् ॥ २३ ॥

एष श्रेष्ठिवरो विभज्य समयं धर्मार्थकामादिक-

प्राप्तेरौपयिकं करोति विधिवत्कर्माविरोधोदयम् ।

तत्त्वज्ञैर्यतिभिः सहाऽर्थनिपुणैर्मान्यैरमुष्याऽऽश्रवैः

नीतिज्ञैः सुविमृश्य पुष्यति ततः सर्वां समीहा फलम् ॥ २४ ॥

सायं प्रातर्विविक्तः सविधि हरिहरायर्चनं संविधाय

ब्रह्मज्ञं वीतरागं प्रशमितमनसं बोधनप्रौढवाचम् ।

ब्रह्मानन्दं बुभुत्सुः श्रयति यतिगुरुं श्रीघनश्यामनामा-

मन्दं संन्यासिवर्यैः सह शुचिमनसा श्रेष्ठिवर्योऽपि नित्यम् ॥ २५ ॥

आत्मानन्दैकनिष्ठः प्रथितयतिवरो ब्रह्मविद्यानदीष्णः

सभ्येभ्यो भिक्षुभिक्षाप्रमुखभरसहं यो गृहव्रातमच्छम् ।

निर्मायैतान्निवेश्य स्वयमुपदिशति श्रेयसे भिक्षुवर्गान्

सोऽयं शान्तः कदाचिद्भजति गृहगुहाभ्यन्तरस्थः समाधिम् ॥ २६ ॥

[illegible] नन्तशान्त्यै
काश्यामस्यां मुमुक्षोर्भवनभुवि मनोहारिनिर्माणशोभम् ।
स्निग्धग्रावोपक्लृप्तं कनकजकलशीवृन्दसन्दीप्रवप्रम्
यस्याऽऽस्ते मेरुशृङ्गद्युतिहरशिखरं मन्दिरं चन्द्रमौलेः ॥ २७ ॥

क्षुद्रानन्दप्रमुखाः सततशिवधियो येऽत्र संन्यासनिष्ठाः
तेषां मन्त्राभिलाषः श्रुतिशिखरगिरां ब्रह्मभूयोपलब्ध्यै ।
दृष्टिध्यानस्तवाद्यैः सगुणरतिपरा येऽपि संसारिचित्ताः
तेऽपि स्वेष्टं लभन्तामिति सकलहितं चेष्टितं श्रेष्ठिनः स्यात् ॥ २८ ॥

शिल्पोत्कर्षान्तिमश्रीपरिचितरचनं शर्वशैलाभलाभं
विद्युद्यन्त्रप्रदीपव्यजनपरिसरोद्धूपिताशेषशालम् ।
नीलानीलोत्पलांशम्फुरदजिररुचिस्वच्छिताद्भ्रशोभं
यस्याऽऽस्ते स्मेरवेश्म स्मरहरनगरे शुभ्रमभ्रंकषाग्रम् ॥ २९ ॥

मित्थे त्रैविक्रमं स्वश्चरणमिव वियद्व्यापि रम्योत्तमाङ्गं
बिभ्रच्छुभ्रांशुशोभां गिरिशगिरिशिशुश्रद्धयैवोपनम्रम् ।
सम्यक्कीर्मीरितांशं कलिकलुषहरश्लोकितान्तप्रदेशं
धर्म्यं हर्म्यं तदीयं हरति जनमनो ज्ञानवाप्यन्तिकस्थम् ॥ ३० ॥

सप्तप्रासादमालासुललितललिताघट्टसंघट्टिताङ्गः
गङ्गाम्भोभङ्गसङ्गीसुखशिशिरमरुत्पाविताशेषशालः ।
द्विव्यद्वारांशुदीप्रोन्नृहदुपलशिलारम्भणोज्जृम्भिशोभः
स्वास्ते विद्यालयोऽस्य त्रिपुरहरपुरे प्राच्यधर्मानुवर्ती ॥ ३१ ॥

ऋग्वेदः शुक्लकृष्णद्विविधयजुरथो सामवेदो ह्यथर्वा
वेदः सूत्रप्रयोगक्रमघनसहितः पाठ्यतेऽत्रैव भिन्नैः ।
तैस्तैरध्यापकैः किं क्वचिदपि विदिता वेदशिक्षेदृशी वः
एतस्यौदार्यमीदृक् प्रथयति नितरां श्रौतमार्गेऽस्य निष्ठाम् ॥ ३२ ॥

मीमांसापाणिनीयश्रुतिशिखरनयज्योतिषन्यायकाव्या-
युर्वेदौलूक्यसांख्यग्रहगणितकलाप्राच्यनव्यप्रभेदान् ।
हिन्दीरामायणाद्यैः सह निगमपुराणेतिहासेङ्ग्लिशादीन्
योग्यानध्यापयन्ति प्रमुदितगुरवो ब्राह्मणानेव यस्मिन् ॥ ३३ ॥

[illegible] मूर्तिमन्मूर्तिमा[illegible]

[illegible] ॥

[illegible] चाऽस्य [illegible]

[illegible] पिपुर्गति पुरुषाः निस्सहायाः कुटुम्बान् ॥ २४ ॥

वस्त्रव्यापारवृद्धिप्रमतविभवतः [illegible]कार्यस्य वृद्धि-

र्भूयादित्याशयेन प्रथितशिवपुरे भूरिशालं विशालम् ।

क्षुभ्यत्क्षुत्क्षामलोकोदरभरणकरं वस्त्रनिर्माणयन्त्रा-

गारं निर्माति भव्यं सुदृढपरिकरं भूतिमानेष धीरः ॥ ३५ ॥

भागीरथ्याः प्रतीरे विलसति विपुलं वस्त्रनिर्माणयन्त्रा-

गारं सर्वातिशायि त्रिदशपतिवनीसोदरोद्यानरम्यम् ।

लक्ष्मीसोल्लासलीलामृनिलयहवड़ागौलि[illegible]

केषां चेतो न [illegible] निखिलं वीक्ष्य [illegible]ऽस्मिन् ॥ ३६ ॥

[illegible]

पोतैः संभोनयन्त्रैः [illegible]सरिद्वारिवीचिप्रसिक्तैः ।

संपूतैः शीतवातैर्व्यवधि विहरतां [illegible]

उद्यानं हृष्टमस्य स्मरयति रुचिरं नन्दनं निर्विशेषम् ॥ ३७ ॥

साङ्गाम्नायप्रचारो भवतु बहुतिथं चिन्तयित्वा वदान्यः

दत्वा लक्षाणि सभाऽचलविभवदृढं कोशमेकं स कृत्वा ।

सर्वं कार्यं कुर्सादैः प्रचलतु निपुणं मा ऽस्त्वपेक्षा परेषां

इत्यास्थो देववाण्या यदकृत सुकृती कोऽपरस्तच्चिकीर्षेत् ॥ ३८ ॥

जन्मस्थानं किलाऽभून्नवलगढमिति ख्यातमेतत्कुलस्य

व्यापारोत्कर्षदृष्ट्या चिरमधिवसतः तद्धि खुर्जा समूर्जा ।

स्वल्पाकाराऽपि भूरिव्यवहृतिजननी भीष्मभूसूरभूता-

स्रोतःपूतद्विपार्श्वा जगति विजयते श्रेष्ठिसत्त्वोपलम्भात् ॥ ३९ ॥

तत्राऽऽस्ते मेघमालाविलसितशिखरोऽदभ्रशुभ्रोऽस्य सौधः

पीयूषांशुप्रसन्नस्फटिकमणिरुचिर्भूरिभूतिप्रभूतिः ।

विद्युद्यन्त्रप्रदीपव्यजनमुखसुखापेक्षिताशेषवस्तु-

स्थित्याऽमन्दप्रमोदं हरिनिलय इव स्वागतेभ्यो ददामः ॥ ४० ॥

आस्ते तस्योपकण्ठं सुरभिसुमलताशोभितान्तप्रदेशः
शीतस्फीतप्रमोदामलसलिलगलद्ग्रीष्मभीष्मोष्मतापः ।
विश्रान्त्यै श्रान्तिभाजां सुघटितशकलैः स्फाटिकैर्बद्धवेदिः
आरामो मृष्टमार्गः सकलजनमनोनन्दनो नन्दनाभः ॥ ४१ ॥

प्राचां वाचां प्रचारो विरल इह जनस्तद् व्युदास्ते स्वधर्मात्,
मैवं स्यादित्यमुष्य स्वकृत गुरुजनः संस्कृतानां प्रवाचाम् ।
प्रौढं विद्यालयं यं स्वपुरि विलसति ऋद्धदोषैरिदानीं
भिन्दानो वासनाभिः सह विमतिबलं जन्मिनां श्रेयसेऽसौ ॥ ४२ ॥

शास्त्राभ्यासोपनीतं परिणतिविरसं शुष्कतर्कोपजीव्यं
चित्तादिश्रान्त्युदर्कं भवभयशमने नाऽलमेकं कदाचिद् ।
विज्ञानं किन्तु भक्त्या सगुणविषयया युक्तमित्येतदीयः
राधाकृष्णस्य विष्णोरकृत जनमुदे मन्दिरं सुन्दराङ्गम् ॥ ४३ ॥

श्रेष्ठिश्रीशपदारविन्दरसिको गीर्वाणभाषाप्रियः
गौरीशङ्करनामकोऽत्रवसतिव्यापारिणामग्रणीः ।
धर्मानुष्ठितिसंस्कृतोज्ज्वलमनाः सप्रेमशुश्रूषया
मातुः श्रीपरमेश्वराङ्घ्रिनलिनध्यानप्रबुद्धात्मनः ॥ ४४ ॥

वार्धक्यप्रभवाप्रगल्भकरणग्रामाऽपि कल्योत्थिता
गङ्गास्नानसुरार्चनस्तुतिजपश्रीविश्वनाथेक्षणम् ।
तत्पूजादिसमाप्य मेध्यमशनं कृत्वा विरम्योत्तरम्
भक्तिप्रेमसुधारसस्रुतिकरान् ग्रन्थान् स्वयं वीक्षते ॥ ४५ ॥

काशीवासपरानुरागवशतो व्यावर्त्य चेतोऽन्यतः
लोकानन्दकराद्विरामविरसान्मायामरीच्यम्बुनः ।
साम्बध्यानपरायणाऽमृतपदप्राप्तिप्रसक्तान्तरा
निर्मोहा मुनिमानसा विजयतामेषा सुपुत्रप्रसूः ॥ ४६ ॥

अस्याः शुश्रूषयाऽसौ व्यवहृतिविषयं सम्पदुत्कर्षभाजं
शुद्धाचारश्रवेभ्यो विदितबहुविधव्यापृतिभ्योऽनुजेभ्यः ।
तत्रस्थेभ्यः समर्प्य स्वयमवहितहृच्चालयन् पत्रयन्त्र-
द्वारा कार्याणि काशीमधिवसति शिवं सान्वयः कर्म कुर्वन् ॥ ४७ ॥

[illegible] कृअदलभिपणः पिल्पलो मे मतीश्वौ
मित्रं विशालगे ऽस्य [illegible] मामदं [illegible] ।
[illegible] मम [illegible] त्वां नियोक्तुं
स्वीकारा[illegible] योगोऽमवदिद च गिरा श्रेष्ठिनो मे प्रवृत्तिः ॥ ४८ ॥

हिन्दीभाषाविवेकाविकसितहृदयः क्वाऽस्मि गम्भीरभावः
ग्रन्थस्याऽमुष्य योगापद्धतमलमनोमात्रमेयस्वभावः ।
क्वाऽस्ते ऽथाऽप्यच्युतस्वामिचरणसुकृपामात्रहस्तावलम्बः
व्याख्यं संक्षिप्य सारं सरलमतिमुदे भाषया वार्तिकस्थम् ॥ ४९ ॥

क्षन्तव्योऽस्मि ममेह दुष्करकृतौ नैव प्रवृत्तिः स्वतः
किन्तु श्रेष्ठिमहोदयोदितवचस्सम्पालनेच्छावशात् ।
दीपो भक्तिसमर्थितोऽम्बरमणिं प्रीणाति तद्वन्मिरं
मूलार्थावगमे स्वतन्त्रधिषणानेना कृतिः प्रीणयेत् ॥ ५० ॥

प्रज्ञावैभवदर्शनाय यशसे नैवाऽर्थलाभाय वा
क्वाऽहं मन्दमतिः क्व चेदृशफलं नैवाऽनभिज्ञाग्रणीः ।
निर्बाधेच्छतया मुनेर्गुरुगिरां निष्ठावतः श्रेष्ठिनः
प्रेमप्रेरणयाऽत्र चाऽच्युतमुनेः प्रावीवृतं प्रीतये ॥ ५१ ॥

अनूद्य सारस्य कियन्तमंशकं परात्मभावं समितेऽच्युते मुनौ ।
तदीप्सितस्याऽखिलपूर्तिवाञ्छया न्ययूयुजच्छ्रेष्ठिमहोदयोऽत्र माम् ॥ ५२ ॥

विद्याविवेकविकसन्महनीयकीर्तिः लोकोत्तरस्वजननीचरणानुरक्तिः ।
सर्वोपकारकरकर्मपरप्रवृत्तिः सुप्रीयताच्चिरमसावमुना वदान्यः ॥ ५३ ॥

यत्पादपद्मस्मरणप्रभावादतीतरं लेखमहाब्धिपारम् ।
सदाशिवौ तौ पितरौ जगत्याः नतेन मूर्ध्ना प्रणमामि भूयः ॥ ५४ ॥

अच्युतग्रन्थमालाया मनीषिभ्यः परश्शतान् ।
धन्यवादान् प्रयच्छामि, तत्सहायो व्यधारिषम् ॥ ५५ ॥
योगिगम्येऽत्र विषये चलतस्स्खलतोऽपि मे ।
उपहासो न योग्योऽस्ति बालस्येव विपश्चितः ॥ ५६ ॥